# ॥ श्रीज्वालामुखीस्तोत्रम् ॥

श्रीगणेशाय नमः ।
श्रीभैरव उवाच ।
तारं यो भजते मातर्बीजं तव सुधाकरम् ।
पारावारसुता नित्यं निश्चला तद्गृहे वसेत् ॥ १॥

शून्यं यो दहनाधिरूढममलं वामाक्षिसंसेवितं
सेन्दुं बिन्दुयुतं भवानि वरदे स्वान्ते स्मरेत् साधकः ।
मूकस्यापि सुरेन्द्रसिन्धुजलवद्वाग्देवता भारती
गद्यः पद्यमयीं निरर्गलतरा मातर्मुखे तिष्ठति ॥ २॥

शुभं वह्न्यारूढं मतियुतमनल्पेष्टफलदं
सबिन्द्वीन्दुं मन्दो यदि जपति बीजं तव प्रियम् ।
तदा मातः स्वःस्त्रीजनविहरणक्लेशसहितः
सुखमिन्द्रोद्याने स्वपिति स भवत्पूजनरतः ॥ ३॥

ज्वालामुखीति जपते तव नामवर्णान्
यः साधको गिरिशपत्नि सुभक्तिपूर्वम् ।
तस्याङ्घ्रिपद्मयुगलं सुरनाथवेश्याः
सीमन्तरत्नकिरणैरनुरञ्जयन्ति ॥ ४॥

पाशाम्बुजाभयधरे मम सर्वशत्रून्
शब्दं त्विति स्मरति यस्तव मन्त्रमध्ये ।
तस्याद्रिपुत्रि चरणौ बहुपांसुयुक्तौ
प्रक्षालयन्त्यरिवधूनयनाश्रुपाताः ॥ ५॥

भक्षयद्वयमिदं यदि भक्त्या साधको जपति चेतसि मातः ।
स स्मराररिव त्वत्प्रसादतस्त्वत्पदं च लभते दिवानिशम् ॥ ६॥

कूर्चबीजमनघं यदि ध्यायेत् साधकस्तव महेश्वरि योऽन्तः ।
अष्ट हस्तकमलेषु सुवश्यास्तस्य त्र्यम्बकसमस्तसिद्धयः ॥ ७॥

ठद्वयं तव मनूत्तरस्थितं यो जपेत्तु परमप्रभावदम् ।
तस्य देवि हरिशङ्करादयः पूजयन्ति चरणौ दिवौकसः ॥ ८॥

ॐ ह्रीं श्रीं त्र्यक्षरे देवि सुरासुरनिसुदिनि ।
त्रैलोक्याभयदे मातर्ज्वालामुखि नमोऽस्तु ते ॥ ९॥

उदितार्कद्युते लक्ष्मि लक्ष्मीनाथसमर्चिते ।
वराम्बुजाभयधरे ज्वालामुखि नमोऽस्तु ते ॥ १०॥

सर्वसारमयि सर्वे सर्वामरनमस्कृते ।
सत्ये सति सदाचारे ज्वालामुखि नमोऽस्तु ते ॥ ११॥

यस्या मूर्ध्नि शशी त्रिलोचनगता यस्या रवीन्द्वग्नयः
पाशाम्भोजवराभयाः करतलाम्भोजेषु सद्धेतयः ।
गात्रे कुङ्कुमसन्निभा द्युतिरहिर्यस्यागले सन्ततं
देवीं कोटिसहस्ररश्मिसदृशीं ज्वालामुखीं नौम्यहम् ॥ १२॥

निद्रां नो भजते विधिर्भगवति शङ्का शिवं नो त्यजेद्
विष्णुर्व्याकुलतामलं कमलिनीकान्तोऽपि धत्ते भयम् ।
दृष्ट्वा देवि त्वदीयकोपदहनज्वालां ज्वलन्ति तदा
देवः कुङ्कुमपीतगण्डयुगलः संक्रन्दनः क्रन्दति ॥ १३॥

यामाराध्य दिवानिशं सुरसरित्तीरे स्तवैरात्मभू-
रुद्यद्भास्वरघर्मभानुसदृशीं प्राप्तोऽमरज्येष्ठताम् ।
दारिद्र्योरगदष्टलोकत्रितयीसञ्जिवनीं मातरं
देवीं तां हृदये शशाङ्कशकलाचूडावतंसा भजे ॥ १४॥

आपीनस्तनश्रोणिभारनमितां कन्दर्पदर्पोज्ज्वलां
लावण्याङ्कितरम्यगण्डयुगलां यस्त्वां स्मरेत् साधकः ।
वश्यास्तस्य धराभृदीश्वरसुते गीर्वाणवामभ्रुवः
पादाम्भोजतलं भजन्ति त्रिदशा गन्धर्वसिद्धादयः ॥ १५॥

हृत्वा देवि शिरो विधेर्यदकरोत् पात्रं कराम्भोरुहे
शूलप्रोतममुं हरिं व्यगमयत् सद्भूषणं स्कन्धयोः ।
कालान्ते त्रितयं मुखेन्दुकुहरे शम्भोः शिरः पार्वति
तन्मातर्भुवने विचित्रमखिलं जाने भक्त्याः शिवे ॥ १६॥

गायत्री प्रकृतिर्गलेऽपि विधृता सा त्वं शिवे वेधसा
श्रीरूपा हरिणापि वक्षसि धृताप्यर्धाङ्गभागे तथा ।
शर्वेणापि भवानि देवि सकलाः ख्यातुं न शक्ता वयं
त्वद्रूपं हृदि मादृशां जडधियां ध्यातुं कथैवास्ति का ॥ १७॥

ज्वालामुखीस्तवमिमं पठते यदन्तः

श्रीमन्त्रराजसहितं विभवैकहेतुम् ।
इष्टप्रदानसमये भुवि कल्पवृक्षं
स्वर्गं व्रजेत् सुरवधूजनसेवितः सः ॥ १८॥

॥ इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीज्वालामुखीस्तोत्रं सम्पूर्णम् ॥